# हसन्तुतराम्

(संस्कृत हास्य साहित्य पुस्तकम्)

**शशिकान्त 'शास्त्री'**

(ज्योतिषाचार्य)

अध्यापक

राजकीय माध्यमिक पाठशाला झारली,

द्वारा संघोल, जिला कांगड़ा (हि. प्र.)

पिन—176091

# भूमिका

आचार्य श्री शशिकान्त शर्मा संस्कृतस्य लोक प्रिय-अध्यापकोऽस्ति-इति स्पष्टमस्ति यत् ग्राम पञ्चायत हारसी-एतदर्थमस्य सम्मानमप्य करोत्। न केवलमयं संस्कृतस्य अध्यापक एवं अपितु संस्कृते लिखति काव्यमपि करोति च। राजस्थाने सम्प्राप्ते कवि सम्मेलनेऽनेन संस्कृत काव्य पाठोऽकारि प्रशंसितश्च तत्रत्य विद्वद्भिः। आकाशवाणी शिमलातोऽपि-अस्य कविताः संस्कृते श्रोतुं शक्यन्ते। दिव्य ज्योतिषः संस्कृत मासिकस्य कृतेऽयं हास्य लेखान् गतेभ्यः पञ्चदश वर्षेभ्यः लिखन्-अस्ति। अस्य "हसन्तुतराम्" इति प्रथमं हास्य साहित्य पुस्तकं संस्कृते प्रकाशितम्। संस्कृते हास्य साहित्यं प्रचुरं नास्ति। अतः पुस्तकमिदमस्या न्यूनताया पूर्तिमवश्यमेव करिष्यति इति मदीयो दृढ़ विश्वासः। पुस्तकस्य भाषा अतीव सरला सुगमा च वर्तते। अनेन न केवलं संस्कृत विदुषामेव मनोरञ्जनं भविष्यति-अपितु संस्कृत छात्रा अपि पूर्ण रूपेण लाभान्विताः भविष्यन्ति। आशासे सर्वमपि संस्कृत जगत-पुस्तकस्यास्य स्वागतं करिष्यति लेखकञ्च प्रोत्साहयिष्यति।

आचार्य केशव शर्मा
(एम. ए. एम. फिल साहित्यरत्न)
प्रधान सम्पादकः
संस्कृत दिव्य ज्योतिः
भारती विहारः मशोवरा
शिमला-171007 (हि. प्र.)

# स्वागतम्

श्री शशिकान्त शास्त्रिणा देववाण्यां प्रणीतं 'हसन्तु राम्' इति नामधेयं हास्यात्मकं गद्य पुस्तकं संस्कृत प्रणयिनां मनोविनोदावहं भवेदिति संस्कृत सेवा परायणा-शास्त्रिमहोदयाय शुभं कामयमानः ।

विदुषां विधेयः
दुर्गादत्तः शास्त्री
विद्यालङ्कार साहित्यरत्न
(राष्ट्रीय पुरस्कार प्राप्तः)
ग्राम तथा डाकघर नलेटी
द्वारा नैहरनपुखर
तहसील देहरा, जिला कांगड़ा
(हि. प्र.) 177104

# उपाहार:

अयि गीर्वाण वाणी परिचरण परायणाः सत्साहित्य परिशीलन यापित क्षणा वैचक्षण्यचणा महानुभावाः। तत्र भवतां भवतां श्री मतामति-रोहित एषोऽर्थो यद्वाङ्मये हास्यः किमस्ति यथा साहित्य दर्पणे विस्तृतं वर्णनमस्ति। हास्य स्थायि भावको विकृत कृदा लम्वनको वैकृताद्युदीपितो गल्लफुल्लाद्यनु भावितः श्रमादि संचारितो हास्य इति वालोपयोगिता। हास्य साहित्यस्य 'हसन्तुतराम' नाम प्रस्तुत गद्य पुस्तकं विरचय्य प्राकाश्यं नीतम्। अत्र क्रमेण हास्य विषयाणाणि समुचित रुपेण लिखितानि सन्ति। हास्य रसः स्वाद्यते। एवमेव भूमिका लेखन कर्मणि आचार्य केशवः मंच सम्पादकः संस्कृत दिव्य ज्योति शिमला एवं श्री दुर्गादत्तः शास्त्री विद्वद्वरा साहाय्यमाचरन्तमायुष्मन्तं शुभाशीराशिभिः समलङ्करोमि। 'गच्छतः स्खलनम्' इति न्यायात् संशोधकं दृष्टि दोषाद्वा याः काश्चित् त्रुटयः सञ्जाता भवेयुस्तां गुण ग्राहिणो मनीषिणः संक्षंस्यन्त इति सानुनयं मेऽभ्यर्थनेति।

सम्वत् 2047

सन् 1990

विद्वद्विधेयः
शशिकान्त शास्त्री
गांव घनीरी
डाकघर हारसी
द्वारा संघोल
जिला कांगड़ा
पिन—176091 (हि. प्र.)

जगदीश :—(रमेशं प्रति) भो मित्र रमेश ! धूम्रयानम् किं दृग् भवति ?

रमेश :—त्वं न जानासि । यस्य मुखात् धूमं निर्गच्छति ।

जगदीश :— एकस्मिन् दिने राजमार्गे गच्छति स्म । कश्चित् पुरुषः धूम्रपानं करोति स्म । सः तस्योपरि उपविष्टः ।
नन्वयं धूम्रयानं अस्ति ।

o o o

कारागार रक्षक :—(कारागारात चौरे निर्गते सति) रक्षकेण उक्तम् ।
भो चोर ! इदं कम्बलं देहि ।

चौर :—(अति शीघ्रमेव अत्र आगमिष्यामि)

o o o

पिता :— वत्स ! पण्डिताः कथयन्ति । यत् मानवः वानरस्य सन्तति वर्तते ।

पुत्र :—तात् ! किम् अहमपि वानरस्य सन्ततिरस्मि ।

o o o

पिता :—वत्स राम ! निज ज्येष्ठान न देहि उत्तरम् ।
अपरदिने रामः विद्यालये पठनार्थगतः । शिक्षक महोदयेन उक्तम्— भो राम ! पाठ स्मृतः । तदा रामेणोक्तम् । श्रीमन् ! मम पित्रोक्तम्, निज ज्येष्ठान उत्तरं न देहि ।

o o o

पिता ।—(तडागस्य तटे लोष्ठैः भेकान घ्नन्तं पुत्रं दृष्ट्वा)

वत्स ! ये जनाः अन्यान् पीडयन्ति ते नरकं गच्छन्ति ।

पुत्रः ।—तदा तु भवान् अपि नरकं यास्यति यतः तद्दिने भवान् माम् अदण्डयत् ।

०　　　०　　　०

कश्चित् कृपणः गङ्गास्नानार्थं हरिद्वारं अगच्छत् । तत्र तस्मात् तीर्थ पण्डिताः हठात् विपुलां दक्षिणां समाद्दन् । ततः प्रयाण समय ते तीर्थ पण्डिताः तमवोचन्—श्रेठिन् । तीर्थं स्थाने कस्यापि वस्तुनः परित्यागेन महत् पुण्यं भवति । भवतात्र किमपि त्याज्यम् इति । कृपणः श्रेष्ठी—अस्तु अहं तावत् पुनरागमनं परित्यजामि ।

०　　　०　　　०

रुग्णः ।—वैद्य राज ! कियन्तं कालं माम् इमान् कटुतिक्त कषायान् क्वाथान् पाययिष्यति भवान कदाहं सुस्वादु मधुरं भोजनं लप्स्ये ?

वैद्यः :—यावन्मम अशेष शुल्कं न दास्यति ।

०　　　०　　　०

कश्चिद् शिक्षकः :— वर्गं प्रविश्य छात्रान् उवाच रे छात्राः "यदि कश्चित् मह्यं दश सहस्त्र रूप्यकान् दास्यति तर्हि प्रथमतः अहं किं करिष्यामि ?" इत्येव विषयम् अधिकृत्य सप्ताहे निबन्धः लिख्यताम् ।
तदा केनचित् छात्रेण लिखितम् । अहं सहस्त्ररूप्यकान प्राप्य प्रथमतः तान् सर्वान् सम्यक् गणयिष्यामि ।

O O O

पुत्रः :—(सहर्षमिव) तात ! इदानीं मह्यं धन्यवादान् देहि । अस्मिन वर्षे अहं भवन्तं पुस्तकं क्रयार्थं वित्त न यचिष्ये ।

पिता :—केन कारणेन वत्स ?

पुत्रः :— अद्यैव मया निर्णयं प्रकाशितः ।
तं श्रुत्वा विगत वर्षे क्रीतानां पुस्तकानां साहाय्येन अस्मिन् वर्षे अपि अहं अध्ययनं करिष्यामि इति मया निश्चितम् ।

O O O

शिक्षकः :— सुरेन्द्र ! गान्धी महोदयस्य विषय प्रकाशय ।

सुरेन्द्र :—श्रीमन । अद्य न-इवः प्रकाशयिष्यामि ।

शिक्षकः :—किमर्थम् । अद्य कः कारणम् ।

सुरेन्द्रः :—अद्य मम पार्श्वे कौमुदी न दिद्यते ।

O O O

पिता :—पुत्र ! त्वं निरीहः गर्दभोऽसि । किमपि कार्यं न करोषि ।

पुत्रः :— तात ! पितामहेन तु उक्तमासीत् यत् त्वं गर्दभस्य पुत्रोऽसि ।

o o o

एकदा रक्षक पुरुषस्य गृहे चौराः प्रविष्टाः । तस्य भार्या उक्तवती । श्रीमन् ! उत्तिष्ठ ! गृहे चौराः प्रविष्टाः ।

रक्षक पुरुषः :—मौनं भूत्वा कथं न स्वपसि अस्मिन समये नाऽहं रक्षकः अत्र अवकाशो विद्यते ।

o o o

एकदा रात्रौ रक्षापुरुषेण चौरो गृहीतः शैत्यमधिकमासीत् । तदा चौरेणोक्तम् । श्रीमन् ! शीतं बाधते अहं गृहं गत्वा कम्बलं आनयामि । रक्षा पुरुषेण क्रोधेन उक्तम् । भो पलायितु इच्छसि । अहं स्वयं तव गृहात् कम्बलं आनयिष्यामि ।

o o o

मोहन :—सोहन ! मम पिता दिवसे त्रिवारम् श्मश्रु मण्डयति ।

सोहन :—अपि अधिक मे पिता दिवसे चत्वारिंशत वारं मुण्डयति ।

मोहन :—कथं असम्भवमस्ति ।

सोहन :—मम तात ! नापितः अस्ति ।

o o o

नराय सर्वात्यधिकं सुखं किमस्ति ?
यदा भार्या स्व मातुः गृहे गच्छति ।

— o —

पुत्र :—जननी समाचार पत्रे समाचारोऽयमस्ति यत् अग्रिम सप्ताहे महा-मूर्ख सम्मेलनं भविष्यति ।

जननी :—तदा अहं किं करवाणि । 'शीघ्र गच्छ'। निज पितरं वद ।

— o —

पुत्र :—(पितरं प्रति) रावणं को हतवान् ?

पिता :—भो मूर्ख ? किमपि न जानासि । शीघ्रं गच्छ रामायण आनय ।

— o —

शिक्षक :—(कवितां प्रति) कविता वद— मक्षिकायां गजे च कोऽन्तरालः ।

कविता :—श्रीमन्, मक्षिका गजस्योपरि उपविशति परं गजः न तस्योपरि उपविशति ।

— o —

भृत्य :—(सुप्तं प्रभुं प्रति) उत्तिष्ठतु भवान् उत्तिष्ठतु ।

प्रभु :—किमर्थं किम् कारणम् ।

भृत्य :—भवता अधुना निद्राया औषधम् न गृहीतम् ।

— o —

अध्यापक :—(पंकजं प्रति) भो पंकज उत्तिष्ठ शीघ्रं वद यत किं फल एतादृशं वर्तते यन्न भक्षणे अपितु श्रवणे अस्ति ।

पंकज :—श्रीमन् परीक्षा फलमस्ति ।

— o —

चिकित्सक :—(उपचिकित्सकं प्रति) पश्यतु द्वारे कः आकारयति ।

उपचिकित्सक :—कश्चित् नूतन रुग्णः भवितुं शक्यते । पुराणा तु न प्रत्यावर्तन्ते ।

— o —

एकः पथिकः अन्यं पृच्छति यत् भवान् किं करोति ? श्रीमन् अहं कविरस्मि प्रथमोऽवदत् । अहं बधिरोऽस्मि ।

— o —

कवर्गमध्ये वार्तालापं श्रुतम्
यदा अहं काव्यं करोमि
श्रोतृणां कर्णौ उत्तिष्ठतः
केवल कर्णौ द्वितीयेनोक्तम् ।
शृणु यदा अहं काव्यं करोमि । तर्हि श्रोतारः स्वयमेव उत्तिष्ठन्ति ।

— O —

मोहन :—सुभाष प्रति, यदि त्वं वनमगच्छ तदा चेत् सिंहः आगच्छेत्
तर्हि त्वं किं करिष्यसि ।

सुभाष :—तदा अहं किं करिष्यामि,
स्वयं एव सिंहः करिष्यति ।

— O —

राम :—मोहन ! किम् संस्कृत अपि भाषा चरण (पादं) इत्युच्यते ।

मोहन :—शोभनम् । फारसी किं भाषा अस्ति । हस्तं-(दस्तं) इत्युच्यते ।

— O —

शिक्षक :—रवि ! हिमालय पर्वतः कुत्र वर्तते ?

रवि :—श्रीमन् ! नाऽहं जानामि ।

शिक्षक :—"त्वं उत्तिष्ठ ।"

रवि :—प्रसन्नो भूत्वा उत्थाय श्रीमन् ! किं अत्र दृश्यति ।

— O —

शिक्षक :—राम ! ताज महलस्य निर्माणं केन कृतम् ।

राम :—(भयेन) श्रीमन् । मया न निर्मितम् ।

— o —

ग्राहक :—कषायपानं कथं अति शीतलम् ?

आपणिक :—श्रीमन् ! इदं दार्जिलिंगस्यास्ति ।

— o —

माता :—पुत्र ! शीघ्रं गच्छ पंजरे मूषक: आगत: ।

पुत्र :—तदा किम् ? अहं मार्जारोऽस्मि ।

— o —

पत्नी :—(भर्तारं प्रति) श्रीमन् भवान् कथं धूम्रपानं करोषि ?

भर्ता :—प्रिये भक्षणे असमर्थोऽस्मि ।

— o —

अध्यापक :—राम कति विधानि लिगानि ?

राम :—श्रीमन्, त्रिविधानि शिव लिगम्, दार्जलिगम्, डालिङ्गम् चेति ।

— o —

अध्यापक :—(छात्रं प्रति) जातेऽहं यत्वं कक्षायांमत्यधिकं भाषनं कुरुषे ।

छात्र :—श्रीमन्, नैव अहन्तु कक्षायां सुप्तो भवामि । न च स्वप्न काले कदापि भाषणं करोमि ।

— o —

एक। पथिक ।—अपरस्य पथिकस्य स्कन्धोपरि हस्तं संस्थाप्य-मित्रवर ! इदं किं नामधेयं धूम्रयान विश्राम स्थलम् ?

अपर ।—बन्धुवर नैवेदं धूम्रयान विश्राम स्थलम् । एषतु मम स्कन्धो वर्तते ।

— o —

पथिक :—इदम् मार्गम् कुत्र गच्छति ?

ग्रामीण :—श्रीमन् ! अहर्निशमत्रैव वसति ।

— o —

पुत्र :—माता ? किम् जिह्वायाः अपि चरणौ भवतः ।

माता :—पुत्र, कि मूर्खोऽसि जिह्वायाः चरणौ न भवतः ।

पुत्र :—तर्हि पिता किमर्थं कथयति यत्तव मातुः जिह्वा अहर्निशं
बहुतरं चलति ?

— o —

द्वौ मूर्खौ नौकायामारूढौ क्वचित् नद्यां तरतः स्म । नौका पानीये निमज्जनं आरब्धवती । एकोऽवदत् मित्र । नौका निमज्जति । अपरः-मूर्खः प्राह क्रन्दनं मा कुरु नौका अस्माकं नास्ति ।

— o —

शिशु :—माता ! मां पाठशाला कथं प्रेषयसि ?

माता :—येन त्वं वास्तविक नरः भूयाः ।

शिशु :—परन्तु शिक्षकस्तु माम् तत्र कुक्कुरं विदधाति प्रत्यहम् ।

— o —

अध्यापक :—कक्षायां नूतन छात्रं प्रति-तव किं नाम अस्ति ?

छात्र :—श्रीमन् ! मम माता कथयति यत कार्यं कुरु नाम स्वयमेव
भविष्यति ।

— o —

जनक :—श्रोधस्ताऽनञ्च नास्तिवरम् किम् सत्यमिदम् ?

पिता :—सत्यमस्ति पुत्र ।

पुत्र :—तदा तु गृह्यतां इदं पत्रं भवदभ्य: मुख्याध्यापकेन प्रदत्तम् ।

—o—

राम :—अम्बे ! किमहं निर्धनाय पणकं ददानि ?

माता :—कथं न पुत्र, परं स कुत्र वर्तते । अत्र तु न दृश्यते ।

राम :—स-तु वहिरेकस्मिन् भागे तिष्ठति । हिम-नवनीतम् (ICECREAM) विक्रीणाति ।

—o—

# सर्वं जानामि

एक: विप्र: आसीत । स वहून छात्रान पाठयति स्म । स वहुषु विषयेषु दक्ष: । कश्चिद् स्वभाव चपलो नूतन: शिष्य: आगत्य तं प्रणमति प्रार्थयते च ।

छात्र :—भगवन् ! अहं नित्यं परिश्रमेण पठामि । मयं परीक्षा करोतु भवान इति ।

पण्डित :—(नूनमयं विद्वानिति मनसि संभाव्य) कानि-कानि शास्त्राणि जानाति भवान ?

छात्र :—सर्वं जानामि ।

पण्डित :—(मनसि, अहो किं न खलु बुद्धिमताम् विषय: नहि तेजस्विना वय: समीक्ष्यते) तत् कस्मिन् विषये भवत: परीक्षा क्रियते ।

छात्र :—यथा भवतामिच्छा ।

पण्डित :—तर्हि, जानाति भवान व्याकरणम् ?

छात्र :—व्याकरणन्तु न जानामि ।

पण्डित :—तत् किं तर्क शास्त्रं जानाति ?

छात्र :—न-च तर्कं शास्त्र जानामि ।

पण्डित :—तत् किं वाद्य विद्यां वेत्ति भवान् ?

छात्र :—नाहं वाद्यं वेह्मि ।

पण्डित :—तर्हि काव्य शास्त्रम्, छन्द: शास्त्रं वा अधीतं भवता ?

छात्र :—किमेवम् बहुभि: प्रश्नै: मयिकदर्थयति भवान ?
व्याकरणं तर्क काव्यं वा जानामि इति तु न मया प्रोक्तम् ।
अहं तु सर्व जानामि ।

पण्डित :—'सर्व जानामि'-इत्युक्तं भवता । अत: सर्वज्ञं त्वां सर्व शास्त्र विषयं प्रष्टुं कामये ।
किमिति कुपित: इव इदानीं प्रतीयते भवान् ।

छात्र :—सर्वं जानामि इति सत्यमुक्तं मया । अहं शब्द रूपावल्यां समागतं सर्व शब्दं जानामि । तत् सर्वमेव पृच्छतु ।

पण्डित :—अहो ! वञ्चितोऽस्मि सर्वज्ञत्वापदेशेन् वाक्पटुना बहुना त्वया अतो ब्रवीमि ।—

शब्दं न जानासि न वेत्सि तर्कम् काव्यं न जानासि न वेदविद्याम् ।
तथापि 'सर्व जानामि' चैवं रे आत्यधिक त्वां सर्वज्ञमत्यम् ॥

—o—

अध्यापक :—कक्षायां प्रविश्य नवागतं छात्रं पृच्छति भो ! तव किम नामधेयम् ?

छात्र :—श्रीमान्, मम् पितरौ वदतः यत्कार्यं कुरु नामधेयं स्वयमेव भविष्यति ।

— o —

एकस्मिन् कार्यालये साक्षात्कारोऽभूत तत्र परीक्षकेण एकः प्रत्याशिः पृष्टः भो ! तव किं नामधेयम् ?

प्रत्याशि: श्रीमन् ! विद्यासागरः ।

परीक्षक :—तव पितुः किं नामास्ति ?

प्र० :—श्रीमन् सरस्वती चन्द्रः ।

परीक्षक :—त्वं किं कार्य करोषि ?

प्र० :—पशून चारयामि ।

— o —

एकः ग्रामीणः प्रथमवारं चित्रपटं द्रष्टुं गतः । यदा चित्रपटारम्भोऽभूत तदाभ्यन्तरे विद्युतं प्रकाशाभावो विहितः । स अगंजत किं वयं उल्लकाः स्म । येऽन्धकारे चित्रं द्रक्ष्यामः ।

— o —

एको भिक्षुकः गृहाङ्गणे गत्वा अवदत् श्रीमन् ! भिक्षां देहि आभ्यन्तरात् प्रत्युत्तरमागतम्—गृहणी गृहे नास्ति । भिक्षुकः पुनरोह— श्रीमन् ! भिक्षां याचे न-तु पत्निम् ।

— o —

पिता पुत्रं प्रति :—पंकज सर्वाधिक वर्षा कुत्र भवति ?

पंकज :—(जनकं प्रति) स्नानागारे सर्वाधिक वर्षा भवति ।

— o —

शिक्षक :—(छात्रं प्रति) वने पशवः जन्तवः वसन्ति । तेषां केशाः कथं लम्बमानाः भवन्ति ।

छात्र :—श्रीमन् वने नापितः न भवति ।

— o —

कश्चिदुवाच :—मित्रवर ? अद्य मया संसारस्य सर्वाधिक मूर्खं—दृष्टा ।

तन्मित्रम् :—कि त्वमद्य कस्यचिदं दर्पणस्याग्रे स्थिता आसीः ?

— o —

शिक्षक :—(छात्रं प्रति) पाषाणो जले तरति न वा ?

छात्र :—श्रीमान् ! नैव तरति ।

शिक्षक :—तत्कथम् ?

छात्र :—श्रीमन् ? वराकः तरणेऽसमर्थः ।

— o —

गुरु :—मोहन ! त्वं वद संसारे सर्वतोऽधिक लाभप्रदः कः जन्तुरस्ति ?

मोहन :—श्रीमन् । कुक्करः ।

गुरु :—सः कथम् ?

छात्र :—यतोहि तं जनाः जन्मतः पूर्वमपि खादन्ति पश्चादपि च ।

— o —

एको वृद्धोऽध्यापको वालान् वोधयति स्म । यत् कालाः कति भवन्ति, तेषां परिचयः का अस्ति । अपरस्मिन् दिने कक्षायां आगतः सः पृष्टवान् । अहं सुन्दरोऽस्मि । अत्र का कालः वद ।

लता :—श्रीमन् ! भूतकालः ।

अध्यापक :— कथम् ?

लता :—यत् भवान् सुन्दरः पूर्वमासीत् ।

— o —

आकाशवाणी केन्द्रे संगीत वाद्य साक्षात्कारे बहव: आमन्त्रिता: । तत्रैक: लम्पट: अपि गत: । सर्वै: स्व-गुणा: प्रकटिता: । यदा लम्पटस्य वार: समायत: तदा निर्देशक महोदयेनोक्तम् । भो त्वं किं जानासि । तदा तेनोक्तम् । श्रीमन् अहं वादनं करोमि । किम् ढोलकं, हारमोनीयम्, अपरान्या । तेनोक्तम् अहं ग्रामोफोन ध्वनि यन्त्रं वादयामि ।

— O —

लता :—सखि । के भर्ता यत लिखति अन्यो न वाचयति ।

शशि :— लता ! मे भर्ता अत्यधिको स्वयं अपि लिखितं स्वयं न वाचयति ।

— O —

शिक्षक :—यत्र वर्षा अत्यधिकं भवति । तत्र किम वस्तु अधिकं जायते ?

छात्र :—श्रीमन् ! छत्राणि ।

— O —

रवि :—सुरेन्द्रं प्रति ! मित्रवर—अहं गत पञ्चमासै: रोटिका न अभक्षयम् ।

सुरेन्द्र :—तदा त्वं कथं जीवितोऽस ?

रवि :—ओदनं भुक्त्वा ।

— O —

माता :—न जाने ऋक्षस्य मुखस्योपरि लम्बमाना: केशा: कथं भवन्ति ?

राम :—हे माता ! वने मुडंनाय नापित: न भवति ।

—o—

नगरपाल :—सावधान ! उत्तिष्ठत । जाग्रत ।

धनिक :—चेत् ! वयं न स्वपामस्तर्हि तव का आवश्यकता विद्यते ?

—o—

शिक्षक :—सुरेश किं त्वं जाने यत् शिवधनु: केन खंडितम् ।

सुरेश :—श्रीमन् । मया न खंडितम् क्षम्यताम् ।

—o—

वणिक :—(विप्रं प्रति) श्रीमन् । माम स्वर्ग नरकयोर्मध्ये प्रेषय । यत्र उभयत्र ग्राहका: आगच्छेयु: ।

—o—

जननी :—(पुत्रं) पंकज अद्य विद्यालये नैव गमिष्यसि ?

पंकज :—जननी अद्य अहं रात्रौ स्वप्ने द्विचक्रिकायां अभ्रमम् अत: विद्यालये नैव गमिष्यामि ।

—o—

भार्या :—क्रोधेन पत्युमुवाच भवान् कुकुरः ।

पति :—क्रोधेनोक्तम् त्वं कुकुरस्य भार्या ।

पुत्रा :—वयं कुकुरस्य शिशवाः सन्ति ।

— o —

भगिनी :—भ्राता पर्णशालां आङ्गल भाषायां किं कथ्यते ?

भ्राता :—भगिनी (HUT) इत्युच्यते ।

भगिन :—यदि आङ्गल भाषा न जानासि तदा 'हट' इति कथित्वा कथं माम वदसि । दूरं अपसर इति ।

— o —

मार्ग दर्शक :—सुतुमिदम् त्रिशताधिका त्रयः वर्षाणि पुरातनः वर्तते ।

पथिक :—परं गत वर्षे तु भवान इदं त्रीणि वर्षाणि इति अकथयत् ।

— o —

राम :—यदि मत्स्याः चलिष्यन्ति तदा ?

श्याम :—वयं ताः गृहितुं धाविष्यामः ।

— o —

शिक्षक :— द्वौ पञ्चमौ कति भवतः ?

छात्र :— श्रीमन् ! किं भवान् अल्पंमपि न गणयति ।

— o —

रुग्ण :—(चिकित्सकं प्रति) श्रीमन् ! भुक्तमौषधम् परं पीडा तथैव वर्तते ।

चिकित्सक :— धैर्यं कुरु ! औषधं भुक्तम् पादौ चालने किञ्चित् कालं लगति ।

— o —

जननी :— पुत्र ! सत्वरं स्नानं कुरु, अन्यथा नलं गमिष्यति ।

शिशु :— जननी नल यन्त्रस्य किम् पादौ भवतः ?

— o —

चटका :— श्रीमन् अहं अस्मिन् नीड़े नैव वसिष्यामि ।

चटक :— तदा आगच्छ आवां पञ्चतारा अभिधानं भोजनालये गच्छाव: ।

— o —

राहुल :— तव पिता निज लम्बमाना। गुम्फैः सह किम् करोति ?

पंकज :— सैव य। तव गुम्फैः विहीना। जनकः न करोति ।

— o —

राम :—मित्रवर ! मम् पितामहस्य पार्श्वे एकः लम्बमान दण्डः आसीत् ।

रमेश :—तदा किम् ! मम पितामहस्य पार्श्वे विशाल भवनमासीत् यः गगनं स्पृश्यति स्म ।

राम :—मित्रं शीघ्रं वद । सः दण्डः कुत्र स्थास्यति स्म ।

रमेश :— तव पितामहस्य भवने ।

— o —

पिता :—(पुत्रं प्रति) त्वया पत्रपेटिकायां पत्र प्रेषणे कथं विलम्बः कृतः ।

पुत्र :—जनकः यत्र-यत्र अहं अगच्छम् तत्र पत्र पेटिकायां तालकयासीत् ।

— o —

एकः रुग्णः चिकित्सालये अगच्छत् । तत्र तं चिकित्सकेनोक्तम् भो रुग्णः त्वं औषधीयं शयनात् पश्चात् प्रातः उत्थाय पूर्वं भक्षणीयम् ।

— o —

जननी :—पुत्रः त्वं अद्य विद्यालये न गमिष्यसि ?

पुत्र :—जननी भवानेव उक्तमासीत् यत् एक स्थाने गमने सम्मानं न भवति ।

— o —

रामेणोक्तम् उपसर्गमपि किं चमत्कारं करोति। "सु" यदि लगति तदा 'सुकन्या' भवति परं 'वर' शब्देन सह मिलित्वा सुवर जायते।

— o —

शिक्षक :— बालाः ! विद्युत यदा गगने भासति तदा अग्रे भासति पृष्ठे गर्जति अत्र किं कारणमस्ति ?

बाल :—श्रीमन् ! अस्मात् कारणात् यत् नेत्रौ अग्रे भवतः पूर्वं, पश्चतः कर्णौ पृष्ठे भवतः तदा ध्वनि पश्चात् श्रूयते।

— o —

एकस्मिन् स्थाने कवि गोष्ठी अभवत तत्र कवि महोदयेन उक्तम् यत् मम् काव्य रचना शीर्षकं वर्तते अग्नि, धूमं, जलादयाश्च तत्र एकेन महोदयेनोक्तम् अस्य कारणम् यत् भवान् धूम्रपान नल यन्त्रोऽसि।

— o —

मोहन :—जनकः ! शिक्षकस्य आज्ञा सदैव पालनं कर्तव्यं इति सत्यमस्ति।

जनक :—कथं न पुत्रः।

मोहन :—तदा मम गुरुः कथयति यत् अहं अस्मिन् वर्षे षष्ठ कक्षायां एव अवसम्।

— o —

शिक्षक :—वर्षा कदा लाभप्रदं भवति ।

बाल :—यस्मिन् दिने विद्यालये अवकाश: न भवति ।

— o —

एकदा चत्वारा: विप्रा। अभ्रामयन् ते मार्गे चौरा। अपश्यन् तान् दृष्ट्वा एक: ग्रामीण: अवदत् एकं अहं हनिष्यामि ।

द्वितीयोऽवदत् :—अहमेकं हनिष्यामि ।

तृतीयोऽवदत् :—अहमेकं हनिष्यामि ।

चतुर्थ :— कायरो आसीत गर्वेणोक्तम् एक: माम् हनिष्यति ।

— o —

अध्यापक :—शरद: यदा त्वं विद्यालये आगत्य न पठसि न लिखसि तर्हि कथं आगच्छसि ।

शरद :—जनकात् भयेन ।

— o —

एक: युवक: (उद्याने) पश्य तव पुत्र: मम् छत्रं त्रोटयति ।

युवक :—नैव असत्यमिदम् मम पुत्र: तु तव द्विचक्रिका त्रोटयति पश्य

— o —

शिशु :—जननी अहं लेखने निपुणः।

जननी :—पुत्र: किञ्चित् पठ किं अलिखत्।

शिशु :—अधुना पठने न निपुणः।

— O —

एकदा कश्चित् युवकस्य ऊष्ट्रः मृतः। तेनोक्तम्–ईश्वरः दयावान् अस्ति। मृत्यो: देवः आगच्छत्। तदा अहं ऊष्ट्रस्योपरि न आसम् चेत् ऊष्ट्रेण सह सह अहं अपि यमेन सह अगच्छम्।

— O —

राम :—भगिनी जनकस्य केशाः कथं अपतन् ?

भगिनी :—प्रज्ञाणां चिह्नमिदं भवति।

राम :—अस्तु ! यत् तव केशाः कथं लम्बमानाः सन्ति।

— O —

ज्येष्ठ भ्राता :—अनुजः भूमि आकारो किन्दृक्मस्ति ?

अनुज :—मण्डलाकारम्।

ज्येष्ठ :—कथं मण्डलाकारम्।

अनुज :—तदा चतुर्भुजम्। अहं अस्मिन् विषय शास्त्रार्थं न करिष्यामि।

— O —

कथाः मूर्खाः कश्चित् तडागस्य तटे अगच्छन् तेषु एकेनोक्तम् । यदि तडागे वह्नि अज्वलयत् तदा मत्स्याः कुत्र गमिष्यन्ति ?

अपरोऽवदत् :—वृक्षे आरुहयिष्यन्ति ।

तृतीयोऽवदत् :—न इदं सम्भवमस्ति किं धेनु महिषाद्याः ये वृक्षे आरुहयिष्यन्ति ।

— o —

कक्षायां शिक्षक महोदयेनोक्तम् भो रमेश ! सर्वाश्यधिको गोधूमाः कुत्र जायते ?

रमेश :—श्रीमन् क्षेत्रेषु ।

— o —

एकेनोक्तम् :—वाहनात् कदा अवतरणीयम् वा कदा आरोहणीयम् ?

अपरेणोक्तम् :—यदा चिकित्सालय समीपस्थ ।

— o —

पुत्र :—जननी ! देहि मे दुग्धं क्षुधा लगति ।

जननी :—पुत्रः दुग्धं तु स्फोटितं जातम् ।

पुत्र :—तदा कथं न सूचिकया सह सीव्यसि ।

— o —

शिक्षक :— गर्दभस्य किम् भोजनं प्रियम् ? कक्षायां केनापि उत्तरं न दत्तम् ।

शिक्षक :— कक्षायां कोऽपि न जानाति ।

एकः छात्र :— भवानेव जानाति श्रीमन् ।

— o —

सैनिक :—(अधिकारीणं प्रति) श्रीमन् ! वायुयानात् कूर्दनं समये यदि छत्रं न अचेष्टत् नहि वयं किं कर्तव्यम् ?

अधिकारी :—सत्वरं सूचितव्यम् अहं भण्डारात् अपरं छत्रं दास्यामि ।

— o —

महेश :—(मोहनं) मित्रवर ! एकदा मम जनकः क्रोधेन भूत्वा गजस्य सून्डं अत्रोटयत् वा सिंहस्य ग्रीवां अत्रोटयत् ।

मोहन :—तस्य किं अभवत् ?

महेश :—किं अभवत् पणयशालायां प्रभुना शतद्रव्यकाणि मुद्रितानि ।

— o —

एकः युवकः आपणे गत्वा बहूनि वस्तूनि मूल्यं अपृच्छत् परं किमपि न अक्रीणत् । विक्रेतारः अवदत् क्रोधेन, भवान् किं इच्छति ? तेनोक्तम् शनैः शनैः अहं 'अवसरं' इच्छामि ।

— o —

लता :—प्रिय ! यदा त्वं काव्यं अकरोत् पञ्चाशत जनाः मौनं आसन् ।

मोहन :— किं इदं सत्यम् ?

लता :—अथ किम् ! सर्वे सुप्ताः आसन् ।

— o —

शिक्षक : –त्वया अधुनाऽपि संसारस्य मानचित्रं कथं न क्रीतम् ?

छात्र :—भवान् उच्यते, यत् संसारस्य गति द्रुतगामी । मया चिन्तिता यदा स्थिरं भवेत तदापि क्रीणयिष्यामि ।

— o —

बालिकाः श्वसुरालये गमन काले किमर्थं रोदन्ति ?

भो युद्ध क्षेत्रे प्रत्येकः निज अस्त्र-शस्त्राणि निरीक्षणं करोति ।

— o —

शिक्षक :— (व्याकरणं पाठयित्वा) वाक्यमेकं वद् येषु वर्तमान, भूतकाल: भविष्यकाल: त्रीणि वाक्यानि स्यू: ।

बालक :—चित्रपट गीतं गायति :—

सौ साल पहले मुझे तुम से प्यार था,
आज भी है और कल भी रहेगा ।

— o —

मनोवैज्ञानिकस्य कथनमस्ति यत् आधुनिक स्त्रीणाम् शिशवाः मातुः स्नेहेन वञ्चिताः भवन्ति। यत् ताः निज श्रृंगारः निष्फलं न भवेत इति भयेन्।

—o—

एकः ग्रामीणः नगरे मित्रेण सह तस्य गृहे भोजनं अभक्षयत्। अत्यधिकं भोजनं तेन भुक्तम् गृहिणी श्रान्ता मध्ये सः ग्रामीणः जलमपि न अपीवत् नगरस्य मित्रेणोक्तम् यत् त्वं भोजनार्द्धे जलं कथं न पीवसि ? ग्रामीणेणोक्तम् जानामि, जानामि यत् भोजनार्द्धे अवश्यं जलं पातव्यम्।

—o—

एकः युवकः अपरं पृच्छति मित्रवर ! अद्य कति दिनांकं वर्तते ?

युवक :—अहं न जानामि।

प्रथम :—भवतः हस्तयोः समाचार पत्रमस्ति।

द्वितीयोऽवदत् :—मित्र ! समाचार पत्रमिदम् गत दिनाकस्य अस्ति।

—o—

शिक्षक :—तव जनकः दास वृतिः अतिरिक्तं किं कार्यं करोति ?

छात्र :—भवान् यत् माम् गृह कार्यं ददाति सः करोति।

—o—

जननी :—(पुत्रं प्रति) क्रोधेन । सत्य वद् यत् लेखनी कुत्र: आनीत: ।

पुत्र :—राज मार्गे अमिलत् ।

जननी :—सत्यं वद् अन्यथा अहं ताडयिष्यामि ।

पुत्र :— जननी ! सत्यं कथयामि । तत्रं को युवक: अन्वेषणं करोति स्म ।

— o —

भृत्य: निज प्रभुं ! श्रीमन् ! मम विडाल: पञ्चत्वं गत: ।

प्रभु :— विडाल: तु मम मृत: त्वं कथं रोदषि ?

भृत्य :—भवान् विडालं यत् दुग्धं ददातिस्म, अहं अपि अपिवम् :

— o —

एक: बालक: आम्र वृक्षं आरुह्य फलानि त्रोटयति स्म ।
मालाकारेण अपश्यत्, अवदत् च अधुनाऽपि त्व गृहं गत्वा
अहं जनकं कथिष्यामि ।

बालक: अकथयत् :—स: गृहं नास्ति । मम जनक: तु निकटस्थ वृक्षे
आम्राणि त्रोटयन्ति ।

— o —

कश्चित् मूर्खः एकदा रात्रौ अचिन्तयत् यत् माम् प्रातः प्रतिदिनं देवाऽर्चनाय वह्निजलश्च आवश्यकता भवति । इतस्ततः भ्रमामि कथं उभौ निक्षिप्वा नहिं मम दूरी कष्टं भविष्यति तेन रात्रौ एकस्मिन् घटे अग्नि-क्षेपणम् करोत् प्रातरुत्थाय सः अपश्यत् । यत् अग्नि शमनं जातं जलमपि दूषितमभूत । निजकीय वैलक्ष्यं जनहासं चोपगतः ।

— o —

कश्चित् धनाढ्य वणिकस्य मूर्ख बुद्धि नामैको पुत्रः आसीत् । एकदा सः कटाह द्वीपे व्यापारार्थं अगच्छत् । तस्य विमाने अन्यानि वस्तूनि सदैव चंदन काष्ठानि अपि आसन् । तस्य अन्यानि वस्तुनि प्रचलित भावेण जनैः क्रीतानि । परं चंदनस्य काष्ठानि केनापि न क्रीत्तानि । यतोहि तस्मिन द्वीपे चंदन विषय अनभिज्ञाः आसन । सः अपश्यत तत्र जनाः काष्ठ आपणैः समीप गत्वा अंगाराणि शीतल खण्डानि यः ईंधन प्रयोगे भवन्ति (कोयला) क्रीणन्ति स्म । एवं अदृश्यत् ।

— o —

सः मूर्खं निज चंदन काष्ठानि प्रज्वालितानि अमूल्यं चन्दनं तृण सदृशं विक्रीय स्व गृहं प्रतिनिवृत्तः । निज जनान स्व चातुर्य्यस्य प्रशंसा अकरोत् परं जनहासंऽभूत ।

— o —

कश्चित् ग्रामे रामदत्त अभिधानं कृषक: वसति स्म । तस्य एक: वानर: अपि आसीत। स: अतीव दुष्ट: आसीत। एकदा स: कृषक: वानरेण सह अन्यत्र ग्रामे अगच्छत् । मार्गे एको तडागं दृष्ट्वा विश्रामं कर्तुं स: तत्रैव अतिष्ठत् । निज दधि तण्डुलानि वृक्षस्य अध: निधाय हस्त पादौ प्रक्षालनाय अगच्छत् । पश्चात् वानर: दधि-तण्डुलानि भक्षितानि । तदुपरान्त स: वानर: निज हस्तयो दधिना विलनं अजाया मुखे चित्रिता । कृषक: प्रत्यावृते अजाया मुखे दधि चिह्नानि अपश्यत् तदा स: अजां अदण्डयत् ।

— o —

कश्चित् सज्जन गृहे एक: मूर्ख: भृत्य: आसीत् । एकदा भृत्यं सज्जनेन आपणात तैलं क्रेतु प्रेषित: । स: पात्रे तैलं निधाय मार्गे आयान्तं मित्रेणोक्तम् — पात्र त् तैलं निर्गच्छति इति श्रुत्वा— स: मूर्ख: पात्रस्य अधो भागं उपरि कृत्वा पश्यति । यस्मात् सम्पूर्णं तैलं भूमौ अपतत् । जना: अहसन् सज्जन: तम् भृत्यमायान्तं दृष्ट्वा क्रोधेन गृहात् निष्कासित: ।

— o —

जनक :—राहुलं अपृच्छत् तव शिक्षक महोदयेनोक्तम् यत् त्वं कक्षायां सर्वात् पृष्ठे उपविश्यसि किं कारणमस्ति ?

राहुल :—नैव जनक: मम पृष्ठे भित्तिरपि अस्ति ।

— o —

एकदा प्रभु: रुग्ण: सञ्जात: निज भृत्यमुवाच शीघ्रं गच्छ-वैद्यं आकारयतु पूर्वं वाक्यमेकं प्रभुना कथितमासीत् यदा त्वं गच्छसि कार्यमेकं करोसि। इदं न शोभनम् अस्ति। चतुर: भृत्य: भयेन वैद्य राजेन सह सत्वरं आगच्छत्। भृत भृ-वस्त्रेण सह। प्रभुनोक्तम् इदं किम् अस्ति। मूर्ख भृत्येनोक्तम् एका क्रिया द्वयर्थकरी प्रसिद्धा।

— O —

कश्चित ग्रामीण: कृषक: आसीत्। स: दग्धानि तिलानि भक्षानि। यत् स्वादु: भवन्ति तेनोक्तम् चेत् क्षेत्रे तिलकाषिका: वपिष्यामि अत्यधिकं स्वादुनि भविष्यन्ति। परं बिजमेकस्य अङ्कुरं ना जायते।

— O —

शिक्षक :—रमेशं वद् तिहाड़ कारागारात् क: अधावत्।

रमेश :—(भयेन) श्रीमन्! अहं तु न अधावम्। कुत्राचत् रक्षितु नासीत्।

सह सदैव गृहात् विद्यालयाय पलायितो भवति।

— O —

न्यायाधीश :— अहं निर्णयं करोमि य: सभायां वदिष्यति स बहिर्निष्कास-यिष्यते।

एक: अपराधी :—श्रीमन्! अहं वदामि महयं बहिर निष्कासयतु।

— O —

रक्षक पुरुष चौरं गृहित्वा मार्गे अगच्छत् । चौरेण अभितम् श्रीमन् ! तिष्ठ अहं सत्वरं धूम्रवर्तिकां क्रीत्वा आगच्छामि । रक्षक पुरुषेणोक्तम् माम् वञ्चसि त्वं अत्र तिष्ठ अहं क्रीत्वा स्वयं आगच्छामि ।

—o—

प्रश्न :—'आलस्यम्' इति विषयमधिकृत्य पञ्चपृष्ठानां निबन्धः लेख्यः ।

छात्र :—पञ्चपृष्ठान् रिक्तान्-त्यक्त्वाऽन्ते लिखति इदमालस्यम् ।

—o—

शिक्षिका :—रेखा किं भवति ?

कविता :—महोदया ! सा तु मम ज्येष्ठ स्वसा ।

—o—

शिक्षक :—पंकज ! त्वं वद् यत् रेखा । बिन्दु मध्ये कोऽन्तरालः ।

पंकज :—श्रीमन् ? रेखा तु मम गृहसमीपे प्रतिवसति, बिन्दुश्च चित्रालये कार्यं करोति ।

—o—

शिक्षक :—(क्रोधेन) त्वं गणिते अनुत्तीर्णः हिन्दी विषये अनुत्तीर्णः,
आंग्लभाषायां अनुत्तीर्ण । अहं पृच्छामि यत् अन्यदपि
किंचित् आगच्छति ।

टीनू :—वाढं- आगच्छति ।

शिक्षक :—किम ?

टीनू :—श्रीमन् भवन्तं दृष्ट्वा स्वेदः ।

— o —

एकस्मिन् कार्यालये साक्षात्कारोऽभूत तत्र परीक्षकेण एकः प्रत्याशी: पृष्टः
भो ! तव किम नामधेयम् ?

प्रत्यशी :—श्रीमन् ! विद्यासागरः ।

परीक्षक :—तव पितुः किं नामास्ति ।

प्र० :—श्रीमन् ! सरस्वती चन्द्रः ।

प० :—त्वं किं कार्यं करोषि ?

प्र० :—पशून चारयामि ।

— o —

जनक :—राम पठने रुचि किम् ?

राम :—जनकः विद्यालये गमिष्यामि गृहे आगमिष्यामि परं कक्षायां न
उपविश्यामि इति रुचि करमस्ति ।

— o —

मूर्ख मित्र :—मरणोपरान्ते गर्दभोस्यात् तदा किं भविष्यति ।

चतुर मूर्ख :—द्वि वारं जन्म न लभते ।

— o —

शिक्षक :—(मोहनं प्रति) मोहन । सर्वात् अधिकं आतपः कुत्र भवति ?

मोहन :—श्रीमन् ! सर्वात्यधिकं आतपः चुल्लिकायां जायते ।

— o —

एकेन वृद्धेन छात्रमपृच्छत् छात्रः त्वं कस्यां कक्षायां पठसि ।

छात्रेणोक्तम्—श्रीमन् अहं स्नातकोत्तर कक्षायां पठामि । वृद्धेन पुनरोक्तम् त्वं माध्यमिक कक्षा उत्तीर्णः न-वा ।

— o —

पुत्र :—जननी ! अद्य अहं विद्यालयं न गमिष्यामि ।

जननी :—किमर्थं ?

पुत्र :—जननी ! चन्द्रवासरे शिक्षकेन अपाठयत् यत् चत्वारः ।

चत्वारः अष्ट भवन्ति । भौमवारे अपाठयत् षष्ठ-द्वौ अष्ट भवन्ति । अद्यश्च अपाठयत् सप्त-एकः अष्ट भवन्ति । अतः यावत् पर्यन्तं शिक्षकः न अनिश्चयत्, अहं विद्यालयं नैव गमिष्यामि ।

— o —

एको भिक्षुकः गृहाङ्गणे गत्वा अवदत्-श्रीमन् ! भिक्षां देहि। आभ्यन्तरात् प्रत्युत्तरमागतम् गृहणी गृहे नास्ति। भिक्षुकः पुनरवद श्रीमन् ! भिक्षा याचे न-तु पत्नीम्।

— o —

कश्चित् मूर्खः प्रथम वारं निज श्वसुरालय अगच्छत्। तस्य श्वसु श्वेन तण्डुलानि पाकार्थं अस्थापयन्। कार्यवशात पाकालयात् बहिरे गता। तेन मूर्खेन तण्डुलानां मुष्ठिं मुक्तानि तदानीं एव श्वसा आगत-वती। सः मूर्ख न तु तण्डुल कणाः मुञ्चामि न क्षिपानि, यस्मात् तस्य कण्ठः विशालो अभवत्। श्वसा चिन्तितवती वैद्यं अकारयत्। वैद्येन तस्य कण्ठे छिद्रं कृतः शल्य चिकित्सया परं दूषित रुधिरस्य स्थान तण्डुले कणानि निर्गतानि श्वसुरालये जनहासं अभवत्।

— o —

कश्चित् पर्वं जनाः नवोदित चन्द्र दर्शनं कुर्वन्ति स्म। तेषु एकः मूर्खः अपि आसीत्। एकेन चन्द्रमसः प्रति उंगलीकं कृत्वा मूर्खात् अवदत्। पश्य इदं चन्द्रं। सः मूर्खः चन्द्रं न दृष्टवा तस्य उंगलीकं अपश्यत्। तस्य कार्यं जनाः उपाहसन्।

— o —

भार्या :—भवान् निज जीवने परोपकार: किं कृतम् ?

पति :— त्वया सह विवाहः ।

— o —

आशु :— (पंकज) पंकज वद् । यत् त्वं सदैव नमन् मुखं कृत्वा किमर्थं भ्रमसि ?

पंकज :—माम् चिकित्सकेनोक्तम् यत् निज उदरस्य चिन्ता निरन्तरं कर्त्तव्यम् ।

— o —

पति धूम्रवर्तिका पिबति स्म । निज भार्या उवाच । कथं त्यज्यामि मम् प्रिया अस्ति । पत्नी क्रोधेन अपृच्छत् इयं तव प्रिया अहं तु किमस्ति ?

त्वं मम प्रियाया शत्रुः पत्युवाच !

— o —

शिक्षक :—पुत्र: ! चन्द्रमसः दिव्यते अत्र किं कारणम ?

पुत्र :—खल्वाटोऽस्ति ।

— o —

शिक्षक :—राहुलं प्रति ! त्वं ह्यः विद्यालये कथं न आगतोऽसि ?

राहुल :—श्रीमन् ! अहं भवन्तं ह्यः चिकित्सालये अपश्यम् इति विचार्य अचिन्तयं भवान् अस्वस्थम् अस्मात् कारणात् अहं न आगच्छम् ।

— O —

न्यायाधीश :—अपराधीनं ! विश्वासं करोमि यत् त्वं अत्र पुनः न आगमिष्यसि ।

अपराधी :— श्रीमन् ! किं भवान् सेवा मुक्तं भविष्यति ।

— O —

रमेश :—अहं असम्भवं सम्भवं करोमि ।

राम :—कथमिदम् ?

रमेश :—असम्भवस्य 'अ' दूरं अपसरे सति ।

— O —

एकस्मिन वृक्षे स्व निर्मित नीडेषु बहवः पक्षिणो वसन्ति स्म । एकदा महती वृष्टिर्बभूव । तदा तस्य वृक्षस्य अधस्तात् शीता कुलान कम्पमानान् कांश्चिद् शृगालान् दृष्ट्वा पक्षिणोऽवोचन्, "भो-भो शृगालाः अस्माभि चञ्चु ममाहृतैस्तृणैः स्वनीडाः निर्मिताः । यूयं हस्त पादादि संयुक्ताः सन्तोऽपि किमर्थमेव तिष्ठथ ?" एतान शब्दान् श्रुत्वा दुष्टाः शृगालाः प्रकुप्य परस्परं अकथयन् "अहो ! एते क्षुद्र पक्षिणः अस्मान्निन्दन्ति । भवत तावद् वृष्टेरुपशमः ।" अतः शान्तायां वर्षायां ते शृगालाः तेषाम् पक्षिणामपि नीडान् विध्वस्तवन्तः ।

— O —

कश्चिद् नरः आसीत् । यदा कदा ग्रामे यः पञ्चत्वं गतः स्यात् । तस्मिन् काले सः किमपि कार्यं न अकरोत्, केवलं सूचनार्थं शङ्ख ध्वनि करोति स्म । ग्रामीणाः रुष्टाः आसन् । इति विचार्य सर्वे निर्णयम् अकुर्वन्, यत् तस्य गृहे यदा कश्चित् मृत्यु भविष्यति । वयमपि पटुता दर्शयिष्यामः । एकदा एवम्भूत् यत् तस्य गृहे कश्चित् सम्बधिनस्य मृत्योऽभवत् । ग्रामीणाः तस्य गृहं गत्वा किमपि कार्यं नाकरोत् । केवल क्रमशः शङ्ख ध्वनि अकुर्वन् । दाह संस्कारे विलम्बो अभवन् । सः दुष्टः इतस्ततः अभ्रमत् तेनोक्तम् केवलं शङ्ख ध्वनि भवन्तः करिष्यन्ति अन्यदपि कार्यं करिष्यन्ति । ग्रामीणाः अवदन् त्वमपि एवं अकुर्वः तस्य फलमिदमस्ति । सः लज्जया अनमत् । तेनोक्तम् क्षमस्व माम् अधुना एवं न करिष्यामि । तर्हि तस्य प्रेतस्य दाह संस्कारः कृतः ।

— O —

पति :— एवं यदि कथय तु अहं त्वत्कृते विषपान कर्त्तुं तत्परोऽस्मि ।

पत्नी :—आम्—आम् कथं न पास्ययिष्यसि मिश्रणं वर्तते ।

— O —

राम :—जनक ! गृहणाम् मम परिणाम पुस्तिका परं धैर्यं पूर्वकम् ।

जनक :—कथम् पुत्रः ?

राम :—यतोहि परिणाम पत्रे अण्डानि न स्फोटानि ।

— O —

एकस्मिन् वने एको दैत्यः अवसत् । एकदा वने परिभ्रमति स्म । मार्गे कश्चित् विप्र अमिलत् । सः दैत्यः तस्य स्कन्धस्योऽपरि उपविष्टः भो अग्रे गच्छ 'इत्येनोक्तम् ।' विप्रः तु भयेन अचलत् । तत्पश्चात् विप्रः तस्य चरणकमलयोऽनुभवं कृत्वा तेनोक्तम् तव चरणौ कोमलौ स्तः कथं ? दैत्येनोक्तम् 'भो, मे, व्रतमिदमस्ति यत् निज चरणौ अहं भूमौ न स्थाप्यामि ।' सः विप्रः एकस्मिन् तडागस्ये तटे प्राप्नोत् ।

तदा दैत्येनोक्तम् :- भो विप्र ! अहं तडागे स्नानं कृत्वा देवाऽर्चनाय गच्छामि यावत् काल प्रयन्तं अहं न आगच्छम् तव अत्रैव तिष्ठ दैत्यस्य वने गते स. विप्रः अचिन्तयत यदा अयं दैत्यः आगमिष्यति अवश्यमेव माम् भक्षयति । अतः सः पलायितः ।

— o —

कश्चित् ग्रामे एकः मूर्खः क्रोधी भवन बहिरे अतिष्ठत् । गृहमध्यान्तरे तस्य एकः मित्रः तम प्रशंसयति स्म । तेनोक्तम् सर्वे गुणाः सन्ति । परं साहसक्रोधश्च अवगुणाः सन्ति । बहिरे सः मूर्खं वार्तालापं शृणोति स्म । सत्वरं भीतरमुपगतः अवगुणान् प्रकटितारस्य कण्ठे वस्त्रं बद्ध्वा अवदत् भो दुष्ट वद् मया कदा क्रोधं साहसश्च कृत । तदा जनाः अन्ये अहसन् । अकथयन् च—प्रत्यक्षं किं प्रमाणम् एवं मूर्खाः निज दोषान् स्वयं प्रकटयन्ति ।

— o —

एकदा कश्चिद् मूर्खः जनैः सह अतिष्ठत् वार्त्तानि शृणोति स्म। किञ्चित्कालान्तर तेषां मध्ये एकः सुन्दरः नरः आगच्छत्। तम् दृष्ट्वा सः मूर्खः अवदत्। अयं मम भ्राता अस्ति। अतः अस्य धनं मम धनम्। परं अयं मम किमपि न लगति। अतः अस्य ऋणं-न मम ऋणमस्ति। मूर्खस्य वार्ता श्रुत्वा सर्वे अहसन्।

— O —

एकदा कश्चिद् मूर्खः जनैः सह उपविश्यत्। निज पितुः प्रशंसयति स्म तेनोक्तम् मम जनकः बाल ब्रह्मचारी अस्ति। एवं श्रुत्वा तस्य मित्रः अपृच्छत्—तव उत्पत्तिः कथमभूत्ः। तेनोक्तम्— अहं तु तस्य मानस पुत्रोऽस्मि।

— O —

मूर्खं दरिद्रस्य वहवाः मित्राः आसन्। तस्य पुत्रमेकं मृतः। स अपरः पुत्रं अपि अमारयत्। यदा जनाः द्वितीयं पुत्रं कथं अमारयत् कारणमपृच्छत्—मूर्खेणोक्तम् वराकः पुत्रः दूरे मार्गे कथं गमिष्यति? अतः अहं तेन सह द्वितीयं पुत्रं प्रेषितः। तदा जनाः उपहासं अकुर्वन्।

— O —

पत्नी कृपणं पतिमुवाच—प्रभु रात्रौ मया स्वप्ने दृष्टा यत् भवान् कश्चिद् आभूषणापणे आगच्छत्।
भवान् तत्र...... ..................
पत्युवाच :—प्रिया स्वप्नस्य वार्ता तु असत्यं भवन्ति।

— O —

भिक्षुक :— श्रीमन् दशपण कानि देहि ।

धनवान :— दशपणकानां का वार्त्ता अस्मिन् युगे किं भवन्ति ।

भिक्षुक :— तदा रूप्यमेकं देहि ।

— o —

प्रथम :— कति वर्षाणि व्यतितानि श्वश्रू: अस्माभि: सह निवसति ।

द्वितीय :— भवान् ताम् कथं न निष्काश्यति ।

प्रथम :— कथं तवत्म्-तस्य गृहे अहं वसामि ।

— o —

पति :— भार्यामुवाच ! अहं पृच्छामि यत् अस्मिन् गृहे कस्य आज्ञा चलति ? मम अथवा तव ।

पत्नि :— तुष्णीं आस्व: ! तथैव शोभनम् । ज्ञात्वा प्रसन्नता न भविष्यति ।

— o —

पिता :— (पुत्रं प्रति) पुत्र ! त्वं पादकन्दुके क्रीडाऽर्थं गच्छसि आमलक-मादिनि कथं नयसि ?

पुत्र :— जनक ! शत्रूणां दन्ताः अम्लाः करिष्यामि ।

— o —

कविता :—(दुग्ध विक्रेतारं प्रति) दुग्धे अत्यधिकं जलं कथं ?

दुग्ध विक्रेता :—गृहिणी ! इदं (टू-इन-वन) दुग्धमस्ति । कषायपाने पिब अथवा जलमिव पित्वा पिपासा दूरी कुरु ।

— o —

रंजना :—(कवितां) कविता मम मातुलस्य पार्श्वे द्विचक्रिकायात्, वायुयानं यावत् सर्वं प्राप्तम् ।

कविता :—विस्मयेन अपृच्छत् । तव मातुलः किं व्यापारं करोति ।

रंजना :— तस्य क्रीडनकानि पणयशाला अस्ति ।

— o —

राम :—(रमेशं प्रति) अहं कदापि अनुचित् कार्यं न करोमि ।

रमेश :—(नायं मान्यो) इदं कथं सम्भवमस्ति ।

राम :—अहं किमपि कार्यं न करोमि ।

— o —

न्यायाधीश :—(चौरं) त्वं निज स्वच्छता विषये किं कथयसि ।

चोर :—श्रीमन् ! अहं प्रतिदिनं दन्तधावनं करोमि, स्नानं करोमि गृहे अपि स्वच्छता भवति ।

— o —

एकस्मिन् दिवसे सम्राटेणोक्तम् भो वीरवल:—यदि त्वं माम् हास्य वार्त्ता श्रावय यस्मात् अहं हसिष्यामि। पारितोषिकाणि दास्यामि। प्रयत्नैरपि नृपः न अहसत्। तदा वीरवलः सम्राटस्य कर्णो मुखं कृत्वा अकथयत्। यदि अधुनारपि न अहसः तर्हि अहं वीरवलं हसन्तं दृष्ट्वा सम्राटः अहसत्।

—o—

एकदा नृप: भृत्यमपृच्छत्। संसारे चतुर मूर्खस्य किम् प्रमाणं भवति। भृत्यः अवदत् यत् कार्यकाले समुत्पने बुद्धि, युक्ति युक्तं उत्तरम् भवेत् सैव चतुरः, विपरीतोत्तरम् न स्यात् सः मूर्खः।

—o—

कश्चित् अरण्ये मुनिः प्रतिवसति स्म। तस्य पार्श्वे एकः कुक्करः अपि आगत्य उपविश्यत्। तदा कश्चित् असभ्य पुरुषेणोक्तम् भगवन्। उभौ कः श्रेष्ठः मुनिः प्रत्यवदत्—भो नरपुंगवाः! यदि अहं सत्कर्म करोमि तदा तु अहं श्रेष्ठोऽस्मि। यदि अहं भोग विलासे जीवनं यापनं करोमि तर्हि मम सदृशः सहस्रैः नरैः तु कुक्करः श्रेष्ठोऽस्ति।

—o—

कविता (पितामही मैसूर-केरलयोः कुत्र स्तः।

पितामही :—अहं न वेद्मि कतिवारं मया उक्तम् निज वस्तूनि सम्यक् प्रकारेण स्थातव्यम्।

— o —

स्वामि :—त्वं माम् भाटकं कथं न ददासि ?

पुरुष :—श्रीमन्। भवानोक्तम् यत् मम गृहं तवैव गृहमस्ति इत्युक्त-मासीत्।

— o —

जनक :—सुरेन्द्र। त्वं जानासि यत् तव शिक्षकः कुत्र वसति ?

सुरेन्द्र :—अहं जानामि सः चतुष्पथे निवसति।

जनक :—चतुष्पथं कुत्र अस्ति ?

सुरेन्द्र :—जनकः शिक्षकस्य गृहं समीपे

जनक :—परं उभौ कुत्र स्तः ?

सुरेन्द्र :—तत्रैव !

— o —

एकस्मिन् ग्रामे कुम्भकारो अवसत् । तस्य एको दुर्बलः गर्दभ आसीत् । अथ स कुम्भकारः कुतश्चिद् व्याघ्रचर्म प्राप्तवान् । अचिन्तयच्च "अनन चर्मणा प्रच्छाद्य रासभं रात्रौ गोधूम क्षेत्रेषु उत्सृक्ष्यामि । क्षेत्रपालाश्च एत व्याघ्रं मत्वा न निष्कासयिष्यन्ति ।" एवं च कृते स रासभो बहुकाल यावद् रात्रौ गोधूम् भक्षणं कृतवान् । एकदा स कुतश्चित् रासभो शब्द श्रुत्वा स्वयमपि तथैव शब्दापयितु मारब्धः । अथ ते क्षेत्रपालास्तं रासभ ज्ञात्वा लगुड प्रहारैः हतवन्तः ।

— o —

पुरा नृपौ महता कलेशेन भगवन्तं शंकरमाराधितवन्तौ । ततः सन्तुष्टः परमेश्वरः "वरं वरयतम्" इत्युवाच । तौ अवोचताम्—स्व प्रियां पार्वती परमेश्वरो ददातु ।" तेन च वरदानस्य आवश्यकता पार्वती प्रदत्त तदनन्तरं ममेयम्' इत्येव मन्योऽन्यं कलहायमानौ तौ कश्चित् प्रमाण पुरुषः पृच्छयताम् इति निश्चित्य ब्राह्मण रुपमाधाय तत्राऽऽगतं तं शिवमेव अपृच्छयताम् आवाभ्यामियं स्वबललब्धा । कस्येयमावयो भविष्यति ?"

— o —

तेनोक्तम्—"युवां क्षत्रियौ । युद्धमेव युवयोर्नियमः एतच्छ्रुत्वा 'साधूक्तमनेन' इति कृत्वा अन्योन्य तुल्यवीर्यौ समकालमेव अन्योन्यघातेन विनाशमुपगतौ ।

— o —

शिक्षक :—(अभिषेकं प्रति) हीरा-मोती परस्परयोः कोऽन्तरालो वद् ?

अभिषेक :—श्रीमन् ! हीरा अस्माकं भृत्यः, मोती कुकुरः अस्ति ।

— o —

पंकज :—जननी अहं एको एवं छात्रोऽस्मि, शिक्षकस्य प्रश्नानां उत्तराणि प्रदत्तानि ।

जननी :—शोभनम् ! पुत्र किम् प्रश्नः ।

पंकज :—वातायनस्य काचफलकः केन भंङ्ग ?

— o —

लता :—जनकः किम् भवान् भूतात् बिभेति ।

जनक :—नैव भवान् ।

लता :—तदा तु-सिंहात् अवश्यं बिभेति ।

जनक :—कदापि न ।

लता :—किञ्चित् कालान्तरं समीपस्थे उपविष्टा । कविता अवदत् मया तु पूर्वमुक्तमासीत् जनकः तु मातुः बिभेति ।

— o —

अध्यापक :—बाला ! सर्वातिरयधिकं कटु भोजनं किमस्ति ?

रमेश :—श्रीमन् ! दण्डम् कटु भवति ।

— o —

ज्योतिषी :—(हस्तस्य रेखा पश्यन्) तव रेखाः दर्शयन्ति । यत् त्वं अधिकं पठिष्यसि ।

शशि :— कति वर्षः अहं पठामि, परं उत्तिर्ण कदा भविष्यामि ?

— o —

एकदा सम्राट वीरबलयोः परस्परयोः वार्त्तानि अकुर्वताम् । सहसा वीरबलस्य मुखात् कश्चित् अपशब्दो निर्गच्छत् । सम्राटं नाशोभत् । सः अवदत् । वार्त्ता कथं करोषि नैव जानासि ? दिने-दिने अशिष्टो जायते । वीरबलेनोक्तम्—श्रीमन् अत्र न मे दोषः परं संगत्या फलमस्ति ।

— o —

चिकित्सक :—पुरातनोऽयं रोगः वर्तते येन सुखं न वर्तते ।

कृष्ण :—(भार्या प्रति) चिकित्सक महोदयः शनैः शनै वद् ! सा तत्रैव स्थितास्ति ।

— o —

सुरेन्द्र :—अहं पठिता, पण्डिता कुशला, सुशीला रम्या : सह पाणि ग्रहणं करिष्यामि ।

रवि :—तर्हि त्वं पञ्च कन्याभि सह पाणि ग्रहणं करिष्यसि ।

— o —

पति :—(समाचार पत्रं पठन्) अवदत् प्रिया शृणु चिकित्सकानां कथनम-स्ति यत् वहुवार्तालापे आर्योः न्यूना जायते ।

पत्नी :—अधुना तु भवान् जानासि मम आर्योः पञ्चत्रिंशति वर्षाभिः न्यून भूत्वा सप्तत्रिंशति वर्षाणि अभवत् ।

—o—

भार्या एकस्मिन् दिने पत्युवाच अहं सर्वत्याधिकं साधु कदा प्रतिभाति ।
पत्युवाच यदा त्वं मम श्वसुरालये भवति ।

—o—

एकः मित्रस्य गृहे गत्वा तत्र स्थापिता मृत सिंहस्य चर्मं दृष्ट्वा अवदत् मित्रवर तव गृहे कः आखेटका येन सिंहः व्यापादितः । तेनोक्तम् मम मातुलेन आसाम प्रदेशात् इदं सिंहस्य चर्मं आनिता तव मातुलः अधुना कुत्र वर्तते । मित्रेणोक्तम् सिंहस्य उदरे ।

—o—

कश्चित् रुग्णः चिकित्सकं दूरभाषेन अकथयत् चिकित्सक महोदय अहं पुरिवतोऽस्मि निद्रां नायाति उपायं कुरु ।

चिकित्सक :—भवान् दूरभाषं हस्तोधारयत् अहं शयन गीतं गायामि ।

—o—

शशि कान्त शास्त्री

जन्म : 7 अगस्त 1949 ई०

गांव : धनौरी, डाक० हारसी, तहसील जयसिंहपुर, जिला कांगड़ा (हि० प्र०)

शिक्षा : साहित्य शास्त्री, आचार्य ओ० टी० (ज्योतिष)

सम्प्रति : अध्यापक रा० मा० विद्यालय, हारसी

लेखक : पिछले 15 वर्षों से हिन्दी, संस्कृत, पहाड़ी भाषा में प्रकाशित ।

पत्र-पत्रकाओं में ललित निबन्ध, नाटक, लेख कहानियां, कविताएं, प्रेरक प्रसंग, हास्य साहित्य गीत तथा हिमाचल प्रदेश की लोक संस्कृति पर नियमित लेख प्रकाशित तथा आकाशवाणी शिमला द्वारा प्रसारित ।

प्रकाशित रचनाएं :- नगारे की चोट (कांगड़ी कविता संग्रह) सतनाजा (एकांकी संग्रह)

प्रकाशनाधीन :- बच्चों के गीत (हिन्दी) हिमाचल की लोक कथाएं (हिन्दी) प्रेरक प्रसंग (हिन्दी) संस्कृत गीत काव्य (संस्कृत) संस्कृत हास्य साहित्य ।

# विशेष सम्मान

1. हिमाचल सरकार द्वारा विद्यालय में बच्चों को लघुबचत के कार्य में प्रोत्साहित करने के लिए वर्ष 1976 में सम्मानित ।
2. दैनिक वीर प्रताप बालोद्यान द्वारा सर्व श्रेष्ठ बाल साहित्य लेखक के लिए 1980 में सम्मानित ।
3. हारसी ग्राम सुधार सभा (रजि०) दिल्ली द्वारा राज्य मन्त्री पर्यटन विभाग हि०प्र० श्रीमति चन्द्रेश कुमारी जी के कर कमलों द्वारा विशेष समारोह में सराहनीय अध्यापन कार्य के लिये वर्ष 1983-84 में सम्मानित किया गया ।